विकिपीडिया

# सदस्यः:डः प्रदीप्तकुमार नन्दः/प्रयोगपृष्ठम्

विकिपीडिया, कश्चन स्वतन्त्रः विश्वकोशः
< सदस्यः:डः प्रदीप्तकुमार नन्दः

**'पञ्चसखा' दर्शनम्**

**शोधसारः**-"पञ्चसखा" उत्कलीय-पारिभाषिक-शब्दविशेषः । अनेन पञ्चानां महापुरुषाणां संयोगो नामोल्लेखो जायते । तेषु बलरामदास-जगन्नाथदास-अच्युतानन्ददास-यशोवन्तदास- शिशु अनन्तदासादयश्च स्मरणीयाः, नमस्याः, अनुकरणीयाः, सम्माननीयाश्चेति सर्वादौ प्रतिभाति । तेषां रमणीयानि दर्शनानि कस्मै न रोचन्ते । भक्तिवादस्य प्रवर्तका इमे उत्कलभूमौ दुःस्थाना भवरोगप्रपीडितानां जनानां कृते कर्णधारा भवन्ति । मार्गदर्शका भवन्ति ,सद्गुरव भवन्तीति नात्र विसंवादः । सर्वादौ जगन्नाथदासविषये वक्ष्यामः ।

**१-अतिबडी जगन्नाथदासः**

पञ्चमहापुरुषेषु जगन्नाथ अन्यतमः स्वतन्त्रः । सर्वे पञ्च द्वापरयुगीय-श्रीकृष्णस्य सखाय भवन्ति । तथाहि उत्कलीये- "द्वापरे सुबाहु सुबल श्रीवत्स नामेण गोपाल । दाम सुदाम आदिकरि । ए पञ्च गोपाल ये सरि ॥ प्रभुङ्क संगे जन्म हेले । पञ्चसखा नाम बहिले ॥ पाञ्चंहे कृष्ण मनु जात । भकत श्रेष्ठङ्क महत॥" ओडिआ साहित्ये प्राचीन-संस्कृतौ इतिहासे च कविकुलतिलकस्य ओडिआ-भागवतकार-प्रख्यात-संस्कृतज्ञ-महापौराणिक-जगन्नाथदासस्य नाम अविस्मरणीयं चिरभास्वतं समुज्ज्वलरत्नं विकसतितराम्। ओडिआ भागवतं वेदव्यासप्रणीतभागवतस्य नानुवादमात्रम् । मौलिकं रसायितं सत्किमपि वैशिष्ट्यमावहति विद्वत्समाजे भक्तानां हृदयगुहायाम् । भेदस्तावत्संस्कृतभागवते ३३५ अध्यायाः, ओडिआ भागवते ३४२ अध्यायाः सन्ति । संस्कृतभागवते अष्टादश सहस्रमन्त्राः ,ओडिआ भागवते तु २७१६० नवाक्षरपदानि विलसन्ति इत्यनयोर्विशेषो वैभवो जगन्नाथस्य । संस्कृतभागवतस्य अतिजटिलतत्त्वं तेनोत्कलभाषया संबोधितम्, सरलीकृतं भावगम्भीयायितं च दरीदृश्यते पठन-पाठनावसरे । अस्य जन्मदिनांकविषये बहुविधानि मतान्तराणि सन्ति। मुख्यतः कौशिकगोत्रिय-दाश इत्युपाधिमण्डित-महात्मा-जगन्नाथदासः १४१३ शकाब्दे पुरीमण्डलान्तर्गत-कपिलेश्वरपुर-शासनवास्तव्ये पितुः भगवानदाशस्य तथा मातुः पद्मावत्याः दक्षिणकुक्षौ भाद्रवमासस्य १४ दिवसे शुक्लाष्टम्यां तिथौ सौरिवासरे/ बुधवासरे वा मध्याह्नसमये अनुराधानक्षत्रे वृश्चिकराशौ एकस्मिन् दरिद्र-ब्राह्मण-परिवारे समजनि । ऐतिहासिकानां मतानि सन्निरीक्ष्य भारतीयपञ्जिकानुसारं तज्जयन्ती १३/०८/१९९१ ख्रीष्टाब्द इति निश्चिता कतिपयैर्विद्वांसैः। चैतन्यदेवेन सह तस्य साक्षात्कारः १५१० ख्रीष्टाब्दे पुर्यां ऊनविंशति वयसि संजातः । महाप्रयाणं च षष्ठीति वयसि मकरमासस्य शुक्ल-सप्तम्यां द्विजानक्षत्रे अर्थात् २५/०२/१५५० दिनांके बभूव इति सप्तदशशताब्दीय-कवि- दिवाकरदासविरचितात् जगन्नाथ चरितामृतात् ज्ञायते । अत्र तेन अभाणि- श्रीकृष्णस्य हास्यात् श्रीचैतन्यस्य तथा श्रीराधायाः हास्यादस्य महानुभावस्य जगन्नाथदासोत्पत्तिः संबभूव । यच्चोक्तमुत्कलभाषया- "श्री वइकुण्ठ नित्यधामे । श्रीराधाकृष्ण एक प्रेमे ॥ एकात्मा भावरेण छन्ति । कोटि युगे भंग नुहंन्ति ॥ श्रीराधा मुख चांहि हरि । मन्दे मधुर हास्य करि ॥ से हास्य मधुर अमृत । तंहु चैतन्य हेले जात॥ येंहु दुहिंक एक भाव । राधा हसिले तहुं लव ॥ से हास्यु जन्मिले तुरित । श्रीअतिबड जगन्नाथ ॥ से वेनि निजअंग चांहि । जाणिले भकति अंशइ ॥ आज्ञा देले नित्य ठाकुर । तुम्भे जन्मिब मर्त्यपुर ॥" इति

भक्तश्रेष्ठ-जगन्नाथः अवतारिपुरुष आसीदिति न सन्देहस्यावकाशः । उत्कलीयकवि-नन्ददासस्य "अणाकार संहितायां" इत्थं वर्णितमास्ते तज्जन्मप्रसंगे । तथाहि- "एबे ये जगन्नाथ जन्म । कहिबा शुण हो अर्जुन॥ पुरुषोत्तम ये क्षेत्ररे । जन्मिबे ब्राह्मण कुलरे ॥ राधांक प्रेम भजन रे । चित्त बुडाइ निरन्तरे ॥ करिब नाम भागवत । धरिब श्रीहरिंक मत ॥" अपि च गोपालखण्डककृत-"पद्मकल्पपुराणे", रामदासविरचिते "दार्ढ्यताभक्तिरसामृते", चन्द्रचूड चइनीकृत-"चकडाबसाणे"ऽपि महापुरुष-जगन्नाथविषये तत्कृतभागवतविषये च पर्याप्ततथ्यमुपलभ्यते । दिवाकरमिश्रप्रणीते "नित्यगुप्तमणि" नामके संस्कृतग्रन्थे बलरामदासात् जगन्नाथदासस्य दीक्षाग्रहणं, प्रतापरुद्रदेवस्य राज्ञै गौरीपाटमहादेव्यै दीक्षादातुं चैतन्यदेवस्यादेशेन जगन्नाथदासस्य नारीरूपग्रहणप्रसंगमधिकं रोचकं मनोरञ्जनं च कारयति। अयं वृत्तान्तः चैतन्यभागवतं तथा जगन्नाथचरितामृतं द्रढयति । वृन्दावनदास-विरचिते "जगन्नाथ सुधात्रय" पुस्तके वर्णितं एकदा प्रतापरुद्रदेवेन श्रीजगन्नाथदर्शनोपरान्ते आगच्छता बटगणेशनिकटे समुपस्थितं जगन्नाथदासमष्टभुजकृष्णरूपेण ददर्श, विस्मयाभिभूतो बभूव च । यच्चोक्तं- अष्टबाहु-जगन्नाथ-दासो वंशीधनुःशरान् । शंखचक्रगदापद्मबिभ्रच्छामोऽभवत्तदा॥ षोडश-शताब्द्यां बंगीयवैष्णवकविना देवकीनन्दनेन "वैष्णव वन्दन" पुस्तके जगन्नाथदासविषये इत्थं लिखितम् – "जगन्नाथ दास वन्दि संगीत पण्डित । यार गान रसे जगन्नाथ विमोहित ॥" अपि च जीवगोस्वामिना वैष्णव वन्दनायां -वन्देऽहं जगन्नाथं यद्गानात् तरवोऽरुदन् विवशा इव । एतदतिरिक्तं

परवर्तिभिरालोचकैरपि जगन्नाथदास-विषये पर्याप्त-प्रबन्धाः विलिखिताः। तेषु १८९७-९८ खीष्टाब्दे एसिआटिक् पत्रिकायां प्रकाशितः मनोमोहन चक्रवर्त्तेः प्रबन्धः प्रकाशितः । अन्येषु १९२३ खीष्टाब्दे तारिणी चरण रथ संपादिते "ओडिआ साहित्यर इतिहासे" , १९२३ प्रकाशिते विजय चन्द्र मजूमदार विलिखिते "Typical selection from oriya literature" पुस्तकस्य प्रथमखण्डस्य मुखबन्धे, १९२१ प्रकाशिते अपर्णा पण्डायाः "छान्द चन्द्रिकायां" , सत्यवादि-पञ्चमखण्डे, गोपीनाथ नन्द विलिखिते "जगन्नाथ दास ओ ओडिआ भागवत" शीर्षके प्रबन्धे, राजकिशोर दाश-संपादिते "ओडिआ भागवतर मुखबन्धे" , १९२१ मसिहायां पण्डित-सदाशिव-मिश्र-विरचिते "अतिबडी श्रीजगन्नाथ गोस्वामी" पुस्तके, १९२८ षु पण्डित-विनायक-मिश्र-विरचिते "ओडिआ साहित्यर इतिहासे" , १९२९ प्रकाशिते जगबन्धु-सिंह-रचिते "प्राचीन उत्कलर ओडिआ भाषा ओ साहित्य आलोचना" नामके पुस्तके, १९४१ संपादिते राय-बाहादुर-चिन्तामणि-आचार्यस्य "भक्त कवि जगन्नाथ दास" पुस्तकादिषु अस्य महापुरुषस्य वर्णनं मिलति । अस्मिन् कार्ये अन्ये महानुभावाः सूर्यनारायण-दाशः, प्रभात-मूखार्जिः, विमान-विहारी-मजूमदारः प्रमुखाः बंगीयाः, डः मायाधर-मानसिं, पण्डित-नीलकंठ-दासः, नरेन्द्र-नाथ-मिश्रः, व्रजमोहन-महान्तिः, चित्तरंजन-दासः अपि च डः हरेकृष्ण-महताबः प्रमुखाः गुणिनो विद्वांसः जगन्नाथ दासस्य महिमानं स्व स्व ग्रन्थेषु वर्णयन्ति स्म । एते सर्वे आलोचकाः दिवाकर दास-प्रणीतं जगन्नाथ चरितामृतमतं समर्थितवन्तः ।

जनश्रुतिः किम्बदन्ती भवतु नाम । किन्तुमस्यालौकीकमैतिहासिकसत्यं लुक्कायितमिति अन्यथाकर्तुं न शक्यते । तस्मान्नावहेलनीया जनश्रुतिः । उदाहरण-प्रसंगेन जगन्नाथस्य पिता भगवान दाशः श्रीमन्दिरे पुराणपण्डा आसीत् । तन्माता पद्मावती प्रत्यहं श्रीमन्दिरं पतिना सह पुराणश्रोतुमायाति स्म । संस्कृतभागवतस्य क्लिष्टशब्दान् वेत्तुं साऽसमर्था । एकदा सा स्वपुत्रं जगन्नाथं कथितवती । पुत्र ! मदर्थम् "ओडिआ" भागवतं विरचय ।

मातुरादेशेन सः "नवाक्षरी" वृत्तेन ओडिआ-भाषया द्वादश-स्कन्धात्मकं श्रीमद्भागवतं रचितवानीति । जगन्नाथ दासः प्रेमभक्तेरुपासकः अनन्य भक्त आसीत् । प्रख्यात-योगिनः परिचय-प्रसंगे जगन्नाथ-चरितामृते दिवाकरो वक्ति-

"द्वादश प्रेम ए जाणै । एडे प्रेम भावुक कांहि ॥ ए अन्ते छतिश वरस। प्रेम साधिले अहर्निश ॥ षाठि वरस देहादिरे । प्रेम स्थापि स्थले गमिले ॥ राधांक प्रेमे जरजर। चित्त बुडइ निरन्तर ॥" इति जगन्नाथस्य प्रेमभक्त्या सह तस्य परमायुरपि निर्दिशति ।

चैतन्यः स्वयं जगन्नाथदासाय अतिबड उपाधिं दत्तवान् । अस्मिन् प्रसंगे एका रोचका कथा श्रूयते । एकदा जगन्नाथदासः वटगणेश निकटे भागवत-व्याख्यानं कृतवान्नासीत् । अस्मिन् समये चैतन्यदेवः स्व-भक्त्यै सार्धं तत्रागतः । कियत्कालं जगन्नाथस्य व्याख्यानं श्रुत्वा आध्यात्मिकोन्नतिं च सन्निरीक्ष्य होरैकं यावत् भावविह्वलितो बभूव । जगन्नाथमालिंग्य तस्मै "अतिबडी" इति संबोधितवान् । तदापरेद्युः सर्वे जगन्नाथदासं अतिबडीति संबोधयामासुः । तद्यथा लीलामृते- "एहि समये श्रीचैतन्य । संगते घेनि सखागण॥ वट तलरे विजे कले । पुराण शुणि तोषहेले ॥ प्रेम भावरे श्रीचैतन्य । दासंकु कले आलिंगन ॥ अढाइ दिवस पर्यन्त। वेनि रहिले प्रेमचित्त ॥" इति उभययोः पारस्परिकं प्रेम अन्यतमम् । चिराचरितम् । मानव-संस्कृतेः परिपूरकम् । यतो हि स्नेहः अथवा प्रेम मानवस्य सहजात-प्रवृत्तिः । अस्याः समुद्भवः केवलं भागवत-पाठेन जायते । सेव्य-सेवक-भावेन तस्योत्पत्तिश्रवणात् । तस्मादप्राकृतभाष्यात्मकं श्रीमद्भागवतं सर्वश्रेष्ठदर्शनम् । अस्मिन् दर्शने प्रेमभक्तेः मूल्यबोधः वस्तुस्थितिश्च यथार्थतया शिक्ष्यते । विज्ञानी भक्तः जगन्नाथदासः जगन्नाथदेवस्य अनन्य-भक्त आसीत् । ज्येष्ठ-बलरामदासात् स दीक्षां नीतवान् ।

नृसिंहः श्रीक्षेत्रस्य आदिपूज्य देवता । तं सर्वे यज्ञनृसिंह इति कथयन्ति । भागवतस्य अनुवादारम्भे निर्विघ्नयायै नृसिंहं तुतोष सः । अनुवादः स्वतन्त्रः । भक्तिविगलितः। मूल-संस्कृतभागवते आदिमः श्लोकस्तावत्- "जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्महृदा य आदिकवयो मुह्यन्ते यत्सुरयः । तेजो वारिमृदां यथा विनिर्मयो यत्र त्रिसर्गोऽमृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥" अस्यानुवादः - "नमइ नृसिंह चरण । अनादि परम कारण ॥ या बिनु आदि मध्य अन्त । विचारे न घटे जगत ॥ इन्द्रिय अर्थ ये जाणइ। स्व तेजे नित्य प्रकाशइ ॥ आनन्द मने वेद सार । ब्रह्माण्डे ये कला विस्तार ॥ यार स्वरूप हृदे चिन्ति । वेद पुरुष न जाणन्ति ॥ मृत्तिका विकार येमन्त । जलरे हुअइ कल्पित॥ जले उपल बुद्धि करि । मृगतृष्णारे येह्ने वारि॥ रूप अरूप स्थिति तिनि । यार गोचरे अनुमानि ॥ स्वभावे नोहे से एमन्त । ए सांख्ययोगीङ्कर मत ॥ आत्म प्रकाशे सदा थाइ । निरस्त कुहुक बोलाइ ॥ सत्य परमानन्द हरि । याहार भावे भबु तरि ॥ एमन्ते सत्य रूप यार । ता पादे मोर नमस्कार ॥" इति जगन्नाथदासस्य अनुवादशैली न दुर्बोधा नापि आक्षरीकी। किन्तु सरल-सुललित-सावलील-पदगाम्भीर्यं तस्य जगन्नाथस्य पाण्डित्यं प्रकाशयति , निःसन्देहमेव । जगन्नाथः पितुः सकाशात् सर्वाणि वेद-वेदान्त-कोश-साहित्य-पुराण-व्याकरणादिनि शास्त्राणि सम्यग्तयाऽधिगतानि । विवाहबन्धनात् दूरं गत्वा तेन चिर-ब्रह्मचर्यव्रतमनुष्ठितम् ।

चैतन्यदेवस्य साहचर्येण तस्मात् अतिबड-उपाधि-विभूषितेन च बंगीयाः श्रीचैतन्याय क्रुद्धा आसन् । केचन चैतन्यं त्यक्त्वा याजपुरं जग्मुः । पश्चात् चैतन्यनिर्देशेन जगन्नाथः याजपुरमागतः । किन्तु ते याजपुरात् वृन्दावनं प्रत्याजगाम । उच्यते असन्तुष्टान् चैतन्यभक्तानवबोधयितुं चैतन्यनिर्देशेन जगन्नाथदासः शिक्षाष्टकं विरच्य तेभ्यः श्रावयामास । किन्तु असफलो जातः ।

जगन्नाथदासः सगुण-निर्गुणयोः, ज्ञान-भक्त्योः सफलः साधकः । आदर्शब्राह्मणः । वैष्णवसंप्रदायस्य कर्णधारः । अनेन पञ्चसप्ततिग्रन्थाः ७५ संपादिता इति पण्डित कुरामणि पाठिविरचिते "अतिबडी जगन्नाथ परिक्रमा" पुस्तके प्रमाणम् । तेषु कतिचन श्रीमद्भागवतं, दारुब्रह्मगीता, पद्मकल्पटीका, ब्रह्माण्डभूगोलः, षोल चउपदी, ज्ञानसागरगीता, भक्तिसंहिता, कलिमालिका, अर्थकोइलि, कृष्णभक्ति कल्पलता, नीलाद्रिशतकं तुलाभिणादयः ग्रन्थाः प्रसिद्धाः दृष्टिपथमारोहन्ति ।

जगन्नाथदासः उत्कलीयानां कृते दिव्यमहापुरुषः । महान् आत्मा । तस्य कवित्वशक्ति अतीव भावगम्भीरा । मृदु-मधुर-पद-संघटित-कर्णरसायन-दिगन्तविस्तारी-परिमितिः भागवतानुवादस्य तस्य । शब्दालंकार-भास्वतो भावव्यञ्जक-परिसरे सर्वत्र उत्कलभूमौ गृहे गृहे मुखे मुखे सः परिचितः । समादरणीयं भागवतं श्रद्धेयं पठनीयं पाठनीयञ्च वरीवर्ति ।

२-शूद्रमुनिः बलरामदासः

मध्ययुगीय ओडिआ साहित्यस्य प्रख्यात साहित्यिकः पञ्चसखिषु ज्येष्ठो बलरामदासः अन्यतमः विलक्षणप्रतिभासंपन्नश्च बभूव । असौ महात्मा न केवलं ज्ञानिभक्तेषु सम्मानित अपितु महात्मना चैतन्येनापि अभिनन्दितः इति चैतन्यभागवते चैतन्यचरितामृते च प्रामाणिक-विषयः । श्रीजगन्नाथस्य अनन्यभक्तेषु बलरामः श्रेष्ठतमः ज्ञानीनामग्रगण्य आसीत् ।

यद्यपि अस्य महानुभावस्य जन्मविषये वंशानुचरित-विषये च किमपि विशेषतथ्यं न समुपलभ्यते तथापि असौ महापुरुषः १४७२ १४८४ वा ख्रिष्टाब्द-मध्ये (कोणार्क) गोप अन्तर्गत 'एरबंग' नामके स्थाने एकस्मिन् शुद्रपरिवारे उत्कलराज्ये जनिमलभत । तत्र अद्यापि तस्य स्मृतयः मिलन्ति । यथा बलरामस्य मन्दिरं विद्यते । एरबंगस्य अनतिदूरे 'बेगुनिआ' इति स्थाने तस्य समाधिपीठो वर्तते । कविः वैष्णव आसीत् मात्र न सन्न्यासी, वस्तुतः आदर्शो गृही एव । जगमोहन रामायणस्य अन्तिमे काण्डे कविना प्रोक्तम्-

"भावग्राही प्रभु मोते दया कले । हृदयरे वसि मोते रामायणे कहिले ॥

से प्रभु कवित्व अटइ एथिर । लोभे मोहर नाम भणाइलि ग्रन्थर ॥

पण्डित जन शुणि न धर मो दोष । समुद्र पंहरिबाकु कलंइ साहस ॥

नारायेण प्रसादे भवसिन्धु तरि । एहा जाणिण शरधा होइला मोहोरि ॥

जन्मेण शूद्र मुंहि अलप वयेस । ग्रन्थ करिवा काले वयस वतिश ॥

दारा सुत धन सुख भोग शिरी । अरोगी दातापण देइछन्ति हरि ॥

ए मर्त्त्यलोके मुं जगन्नाथ सेविवि । इछा होइले पुण वैकुण्ठकु यिवि ॥" इति ।"

ईश्वरदासस्य चैतन्यभागवते सः याजपुर प्रदेशे चन्द्रपुरे अजायत इति लिखितमस्ति । किन्तु दार्ढ्यताभक्ति रसामृत-पुस्तके सः सपरिवारं पुर्यां अवसत् इति ज्ञायते । अस्य पिता सोमनाथ महापात्रः माता च यमुनादेवी आस्ताम् । तस्य पिता प्रतापरुद्र देवस्य कर्मचारी आसीत् । अन्ते सोऽपि प्रतापरुद्र देवस्य राजभवने राजसेवां कृतवान् । चैतन्यदेवस्य सम्मेलनेन तेन राजसेवां विहाय वैष्णवधर्मं गृहीतवान् । एकदा सः जगन्नाथमन्दिरस्थित मुक्तिमण्डपसभायां वेदान्तशास्त्रे पण्डितगोष्ठीषु भागं गृहीतवान् । किन्तु तदानीन्तन पण्डिताः तं शूद्र इति मन्यमानाः अनादरं कृतवन्तः । अत्यधिक भावप्रवणता सकाशात् केचन तं मत्त बलराम इति कथयन्ति । तत्प्रोक्त भगवद्गीतायां तेन स्वपरिचयः इदृशः प्रदत्तः-

महापात्र सोमनाथ तनये । बलरामदास गीतारे कहे ॥ अपि च रामायण्स्य आदिकाण्डे तेन भणितम् ।

"सोमनाथ महापात्र कोले होइलि सम्भूत । एहुं पिता मोर विष्णुरे भकत ॥

तेणु जगन्नाथ मोते दया कले । रामायण ग्रन्थ मो मुखे वखाणिले ॥

महामन्त्रीवर सोमनाथ महापात्र । बलराम दास मुं ये ताहांकर पुत्र ॥" इति ।

बलरामदास एकाधारेण कविः साधकः भक्तश्च । प्रत्येकक्षेत्रे स अनन्यगुणसंपन्न आसीत् । भक्तिसाहित्यपरंपरासु ज्ञान-योग-भक्तीनामेकीकरणं तस्य अनवद्य-कृतिसु अन्यतमम् । उत्कलीय वैष्णव धर्मस्य पञ्चसाधकाः 'पञ्चसखा' इति उत्कलभाषया परिचिताः सन्ति । बलराम-जगन्नाथ-अच्युतानन्द- यशोवन्त-अनन्तदासाः पञ्चसखायः भवन्ति । अच्युतानन्दस्य "शून्यसंहिता"यां यशोवन्तस्य "चौराशी-आज्ञा"यां च पञ्चसखीनां सम्यक् सूचना मिलति। किन्तु चैतन्य चरितामृते चैतन्य भागवते च एतेषां विषये न किमपि तथ्यं समुपलभ्यते । दिवाकरदासस्य जगन्नाथ चरितामृते बलरामदास विषये लिखितमास्ते ।

१५/०९/१५१० खीष्टाब्दे चैतन्येन सह बलरामस्य संयोगो विहितः । चैतन्यदेवः बलरामस्य प्रतिभया विमुग्धोऽभूदिति कतिपयेषु ग्रन्थेषु उपलभ्यते । कथ्यते बलरामो वेश्यासक्त आसीत् । यमुनानाम्नी कामपि वेश्यालयं सः प्रत्यहं गच्छति स्म । एकदा रथयात्राकाले सहसा वेश्यागृहादागत्य सः रथमुपरि आगतवान् । सेवकाः बलरामं वारितवन्तः । तदा बलरामः समुद्रतीरं गत्वा तत्र सिकताभिः रथं निर्माय रथयात्रां कृतवान् । अत्र बडदाण्डे रथः न चलितः । पश्चात् जगन्नाथस्य स्वप्नादेशेन राजा बलरामं क्षमां याचित्वा ससम्मानं तं पुनः रथं प्रति आनीतवान् । वस्तुतः यमुना न वेश्याऽऽसीत् । जगन्नाथस्य परमा साधिका आसीत् । जगन्नाथस्य निर्देशेन हि बलरामः प्रत्यहं यमुनागृहं गच्छित स्म ।

बलरामदासः सिद्धसाधकस्थथा प्रख्यातो हठयोगी आसीत् । पिण्ड-ब्रह्माण्डतत्त्वेषु तस्य साधना बलीयसी आसीत्। प्रबुद्ध-बलरामस्य जगन्नाथे आसीत् अखण्ड विश्वासः । तन्मतानुसारं जगन्नाथः स्वयं वैकुण्ठवासी । पुरी एव नित्यधाम । कायासाधनया हि मोक्षप्राप्तिः चरमलक्ष्यम् । एतद् बलरामदासस्य मुख्य-दर्शनम् । ज्ञान-योग-भक्तीनां समीकरणार्थं हि बलरामस्य प्रयासोऽत्र सिद्धः । ।

बलरामदास आसीत् जातिस्मरः । सारलादासः गोरक्षनाथ इव तत्पूर्वजन्मवृतान्तः तेन बहुषु ग्रन्थेषु समुल्लिखितः। तथाहि रामायणस्य लंकाकाण्डे-

"मुं बलरामदास रामायण अबतारे थिलि । दिहुडि धरिण मु समस्त देखिलि ॥

मते आज्ञा देले मर्त्त्य पुरकु यिबु । कलियुगे शूद्रमुनि होइण जनमिबु ॥

जन्महुं वर्णकथा सुमरिबु तुहि । श्रीजगन्नाथ प्रभु ये मोहर गोसांइ ॥" इति । यदि वा बलरामः शूद्र आसीत् किन्तु न अधमः नापि पतितः नापि अज्ञानी एव । कवेः विनम्रता हि तस्य स्वभावं प्रमाणयति । तदुक्तिः अयोध्या काण्डे-

"मुंहि पामर ये विशेषे शूद्रयोनि । सुज्ञ जने कोप न करिबे एहा शुणि ॥

नीलगिरि जगन्नाथ किछु दया कला । तेणु से ग्रन्थमो हृदरु स्फुरिला ॥

बलराम दास मुं श्रीहरि सेबक । शुणि उपहास न कर दुष्ट लोक ॥"

तन्मतानुसारं मनुष्यः ब्राह्मणगृहे जाते सति न ब्राह्मणो भवितुं पारयति, कर्म मनुष्यं ब्राह्मणं करोति शूद्रं वा करोति । तस्मात् कर्म प्रधानमत्र । पुराणालोचन-शास्त्रालोचन-सभायां तस्य सदैव योगदानमासीत् । बलरामदासस्य प्रतिभां सन्दर्श्य तदानीं ब्राह्मणानां इर्षा सीमा लंघिता । एकदा मुक्तिमण्डपे भगवद्गीता-आलोचना प्रसंगे शूद्रो बलरामः उपस्थित आसीत् । पण्डित-ब्राह्माणास्तं तत्र दृष्ट्वा भर्सितवन्तः । तं विताडयितुं राजानं प्रतापरुद्रदेवं अनुरोधितवन्तः । किन्तु एकेन शूद्रमुखेन वेदोच्चारयितुं बलरामः ब्राह्मणानां सम्मुखे प्रतिज्ञां कृतवान्। तदा पण्डिताः जनैकं मुक-वधिर-भिक्षुक-हरिदासं मुक्तिमण्डपं प्रति आनीतवन्तः । यदा बलरामः हरिदासस्य मस्तकस्पर्शं कृतवान् तदा स निरर्गलतया वेदपाठं चकार । एतद्दृष्ट्वा पण्डिताः आश्चर्यचकिताः बभूवुः । राजा बलरामस्य अलौकीकतां सन्निरीक्ष्य प्रसन्नोऽभूत् । ससम्मानं बलरामं प्रणामं चकार । श्रूयते जगमोहन-रामायण-रचनावसरे बलरामदासः प्रभु-जगन्नाथेन सह लंकां गतवान् । तस्मिन्नेव काले जगन्नाथः बलरामाय किमपि सुवर्णहारं रक्षणाय प्रदत्तः । प्रातः श्रीमन्दिरे सेवकैः जगन्नाथ समीपे हारो न दृष्टः । अत्र बलरामः जगन्नाथस्य हारं स्व समीपे दृष्ट्वा तस्मै प्रत्यावर्त्तयितुं श्रीमन्दिरमागतवान् । सर्वे बलरामं चौर इति कथितवन्तः । कारागारेऽपि निपतितः सः । रात्रौ स्वप्ने बलरामस्य स्वरूपं महाप्रभोः ज्ञात्वा क्षमां ययाच कारामुक्तं च चकार राजा । जगन्नाथः सदैव सिद्ध-योगिनिभिः प्रपूजितः इति बलराम अभाणि ।

बलरामदासः रामतारकमन्त्रस्य सिद्धसाधक आसीत् । समग्र-मध्ययुगीय-साहित्येषु बलरामस्य कतिपयानि साहित्यानि कुसंस्कारादि क्षेत्रेषु समाजविप्लवस्य वह्निं प्रज्वालयन्ति । सम्माज संस्कारकार्येषु सहायकाः भवन्ति । बलरामस्य बहवो रचनावल्यः दृष्टिगोचरा भवन्ति । तेषु जगमोहन रामायण(दाण्डि रामायण)- ब्रह्मपुराण-महाभारत- चण्डीपुराण- लक्ष्मीपुराण- कुरालपुराण- नामरत्नगीता-मृगुणीस्तुति- दुर्गास्तुति- कान्तकोइलि- कमललोचन चउतिषा-वारमासी- भावसमुद्र- वट अवकाश- भक्ति रसामृत सिन्धु- सभाविनोद- रामविभा-कृष्णलीला-रसकेलि- ब्रह्माण्डभुगोल- शरीरभुगोल- बेढा परिक्रमा-अर्जुनगीता- गजनिस्तारण गीता- भगवद्गीता- अमरकोशगीता- गुप्तगीता- छतिश गुप्तगीता- गरुड गीता-विराटगीता- गणेश विभूति गीता- गीतासार-नीलसुन्दर गीता- कलिभारत- बउला अध्याय- पणस चोरी इत्यादि ग्रन्थाः वैशिष्ट्यमावहन्ति । एषु ग्रन्थेषु जगमोहन रामायणं साहित्यदृष्ट्या अत्युन्नतम् । दाण्डि रामायणं सप्तकाण्ड विशिष्टम् । मूल-संस्कृत-रामायणस्य स्वाधीनानुवादः । ब्रह्माण्ड भुगोलः तत्त्वमूलकः । अत्र पिण्ड-ब्रह्माण्डविवरणी समुपलभ्यते । गुप्तगीता वा ब्रह्मगीता गद्यपद्ययोः संगठनम् , आध्यात्मिकी प्रवृत्तिः । अमरकोषगीता विराटगीतयोः ब्रह्मज्ञानं प्रचुरम् । ज्ञानचूडामणिः गद्यः यौगिकः । श्रीमद्भगवद्गीता मूलगीतायाः सहज लोकप्रसिद्धः पद्यानुवादः । लक्ष्मीपुराणं क्षुद्रकाव्यम् । नारीसशक्तीकरण-विशुद्ध-भक्तेश्च प्रतिपादनमत्र । अन्ये ग्रन्थाः आध्यात्मिकचेतनाषु परिपूर्णाः । जगमोहन रामायणं दाण्डिवृत्तेन (विषमाक्षर) लिखितमस्ति । स्वकीय मौलिकप्रतिभया तेन

रामायणस्य विरचनं कृतम् नानुवादेन । तात्कालिक समाजस्य जातिभेदप्रथां विलोक्य सत्शिक्षायै तेन लक्ष्मीपुराणं संपादितम् । यत्तु सर्वेषामुत्कलीयानां गृहे गृहे परिचितम् । मध्ययुगीय सिद्धसाहित्य परंपरायां तस्य स्थानं महत्वपूर्णं भजते । साहित्य माध्यमेन सः आध्यात्मिकविप्लवं सृष्टिकर्तुं समर्थोऽभूत् । ओडिआजातेः सश्विरो नमस्यः ।

३-महापुरुष अच्युतानन्ददासः

'पञ्चसखा' युगस्य न केवलं ओडिआ साहित्यक्षेत्रे प्राधान्यता वर्तते अपितु उत्कलीय सामाजिकस्थथा आध्यात्मिकयुगस्य अभ्युदय अत्र संघटते इति नैव अत्युक्तिः । महान् साधकः एवं कविः अच्युतानन्दः ओडिआभाषा साहित्ये उत्कलीयधर्मधारायां च अभूतपूर्वो विस्मयः । षोडशशताब्द्यां तल्लेखनीद्वारा अजस्र संहिताः,पुराणानि,गीताः, वंशानुचरितानि,मालिकाः,राहासाः,कोइली-गुज्जरी-टीकाः,कल्पाः,ओगालाः,यन्त्राणि एवं वसाण-प्रभृतयः सृष्टयः निर्झरिताः अवारितरूपेण । श्रीजगन्नाथं केन्द्रीकृत्य तस्य रचनाः उत्फुल्लिताः पल्लविताः । जगन्नाथं अक्षरब्रह्मरूपेण कदाचित् बुद्धरूपेण कदाचिद्वा शून्यदेहि निराकारब्रह्मरूपेण सः पूजयामास । दिव्यद्रष्टा दार्शनिकः, रहस्यवादी कविः, असाधारण शब्दनिर्माता, समाजसंस्कारकः एवं आध्यात्मिकगुरुरूपेण च सः आत्मनः परिचयं प्राददात् । सारस्वत भाष्यकारत्वेन अच्युतानन्द आसीत् अनन्य सन्थः । पञ्चसखीनां मध्ये अच्युतानन्दः असाधारण प्रतिभावान् बभूव । महामान्य-महापुरुष-अच्युतानन्ददासस्य निर्दिष्ट-जन्मदिनांकविषये बहु विप्रतिपत्तयः श्रूयन्ते । कथ्यते पुरुषोत्तमदेवस्य २१ अंके अर्थात् १४८२ ख्रीष्टाब्दे कटकमण्डलस्य 'नेमाल' इत्यस्य अनतिदूरे 'तिलकणा' ग्रामे माघ शुक्ल एकादश्यां तिथौ अयं महात्मा एकस्मिन् शूद्रकुले अजनि । 'उदय काहाणी' ग्रन्थे सांकेतिकरूपेण तेन स्वजन्मदिनांकविषये स्वशिष्यं रामचन्द्रं प्रति इत्थं कथितम्-

'पचारिलु राम जनम अंक । अति हिं गुपत बड विवेक ॥ डाहाण अंकक़ु गुणिवु येवे । वाम अंक गोटि मिशाअ तेवे॥ एमन्त साल होइव निजर । शुण रामचन्द्र एथि भितर ॥ सात भुज अरि मणि मित्ररे । तारि सन घेन ओड्र राष्ट्रे ॥ ए अंके मुंहि जनम हेलि । अच्युत पामर नाम पाइलि ॥' 'ओडिआ साहित्यर इतिहासे' पण्डित सूर्यनारायण दासेन तस्य जन्मांकः १४८२ इति स्वीकृतः । तल्लिखित शून्यसंहिताग्रन्थावलोकनेन केचन ऐतिहासिकाः तज्जन्मदिनांकः १५०२ इति कथयन्ति । अपरे १५११-१५१२ मध्ये इति समामनन्ति । केचन १४८५ इति स्थिरीकुर्वन्ति । यद्भवतु तत्परिचयविषये तेनोक्तम्-

'अच्युतानन्द दास नाम मोहर नेमाल ग्रामरे घर ।

शूद्रकुले मुंहि जनम लभिछि आज्ञा घेनि प्रभुंकर ॥' इति ।

ईश्वरदासस्य चैतन्यभागवते सः करणकुले जन्मोऽभूदिति लिखितमस्ति । अच्युतो जात्या कर्मकार आसीदिति 'भावनावर' ग्रन्थे संसूच्यते । सः जात्या गोपाल इति किम्बदन्ती अस्ति । वर्णटीकायां तेन भणितम्-

'मोर पितामह से गोपीनाथ । दास तांकर अटे पाधित ॥

श्रीक्षेत्रे छामुकरण से थिले । छामु आज्ञारे दिन से काटिले ॥

तांक पुत्र मोर पिता अटन्ति । श्रीक्षेत्रे खुण्टिआ कर्म करन्ति ॥

प्रताप नृपति सन्तोष ह्वन्ते । खुण्टिआ पद देले मोर ताते ॥' इति ।

अच्युतानन्दः जातिस्मर आसीत् । तत्पूर्वजन्मप्रसंगे अनन्तयुगे सुदामः,सत्ययुगे कृपाजलः,त्रेतायां नीलः,द्वापरे सुबाहुः कलौ च सः अच्युतनामधारी आसीदिति तेन 'गोपालंक ओगाल' पुस्तके भणितम् । गुरुभक्तिगीतायां तु पञ्चसखीषु चतुर्णां नामानि इत्थं भणितानि । यच्चोक्तं-

'अनन्त शिशु ये रामानन्द वइष्णव । यशोवन्तदास मध्वाचार्य वइष्णव ॥

बलरामदास विष्णु श्यामदास होइ । नित्यानन्द वइष्णव अच्युत वोलाइ ॥' इति । अत्र जगन्नाथदासस्य नाम नास्ति ।

अच्युतानन्दस्य पिता दीनबन्धु खुण्टिआ माता च पद्मावती आस्ताम् । तस्य धर्मपत्न्याः नाम चम्पावती आसीत् । चम्पावती अडंग-गडस्य राज्ञः रघुरामचम्पतेः कन्या आसीत् । अच्युतस्य गदाधरः नामा पुत्रः, द्वौ भ्रातरौ एका च भग्नी आसन् । श्रूयते दीनबन्धुः बहुकालात् अनपत्य आसीत् । श्रीजगन्नाथ-कृपया हि तस्य सन्तानमभूत् । पुरीयात्रा समये गरुडस्तम्भं निकषा सः एकं शिशुपुत्रं दृष्टवान् । पश्चात् श्रीजगन्नाथसेवया तस्य गुणवान् पुत्र अजनि । तस्य श्रद्धानाम अगणि आसीत् । यदुक्तं शून्यसंहितायाम्-

'खुण्टिआ दीनबन्धु नाम बोलि ता पद्मावती वोलि नारी ।

प्रभु आज्ञा घेनि प्रवेश होइलि गर्भेण मुंहि ताहारि ॥

दशमास दशदिवस मध्यरे शुक्लमास एकादशी ।

जनम लभन्ते पिता मो देखन्ते अपुत्रीक दोष ध्वंसी ॥

जात कर्ममान पिता माता कले षठी उठिआरि तुले ।

अगणा अपोछा करिण मो नाम अनेक प्रकार देले ॥

के वोले अनाम अगणि त नाम के वोले अनन्त हरि ।

पिता माता शेषे डाकिलेत मोते अच्युत नामटि धरि ॥'

दारिद्रता तस्य नित्य-सहचर आसीत् । उक्तं च शून्यसंहितायाम् अष्टादशाध्याये-

'तिलकणारे मुं जनम लभिलि केहि न चिन्हिले मोरे ।

अगणि त वोलि माता डाकुथान्ति अन्न न मिलइ घरे ॥' इति । एकदा पित्रा सह सप्तमवयसि सः पुरीं गतवान् । तन्मिन्नेव काले श्रीचैतन्यः पुर्यामासीत् । पितुः निर्देशेन सः चैतन्यदेवस्य पादौ साष्टांगं प्रणिपपात । श्रीचैतन्यः अच्युतं दीक्षादातुं सनातनं आदिदेश । उक्तं च शून्यसंहितायाम्-

'शिरी सनातन स्वामींकु चाहिण आज्ञा देले शचीसुत ।

अच्युतानन्दंकु तुमे उपदेश कर हे याइ तुरित ॥' अपि च गुरुभक्तिगीतायां-

'नन्द किशोर वर्णमूले । रामकृष्ण ये गुरु देले ॥

सनातन ये दासंकु हिं । नन्दकिशोर देले कहि ॥

मुं अटे अच्युत ये देही । सनातन ये कृपा वहि ॥' अपि च तत्र-

'दोलि ग्रामे तांक वास वैरागीर देही ।

एक शिष्य मुंहि तांक अन्य शिष्य नांहि ॥' अत्र यः सनातनः सः न चैतन्यदेवस्य अन्तरंग अपितु भिन्न एवेति प्रतीयते ।

दीक्षां पश्चात् तस्य भावान्तरो जातः । स्वग्रामं प्राप्य सः एकस्मिन् वटमूले श्रीजगन्नाथं ध्यानकर्तुं चेष्टितवान् । कियत्कालानन्तरं ध्यानावस्थायां स्वप्ने एकः ज्योतिर्मयः पुरुषस्तत्रागत्य गुरुरुपेण तमुपदिष्टवान् । गुरुणा उपदिष्टः सन् आध्यात्मिकमार्गे मनोनिवेश । पश्चात् चैतन्यदेवात् मन्त्रं गृहीत्वा कौपीनं परिधाप्य गीतादिशास्त्रं प्रशिक्ष्य करतालं गृहीत्वा तीर्थाटनं कृतवान् । नानातीर्थं परिभ्रम्य वृन्दावने वर्षद्वयं उषित्वा पुनः चैतन्य सकाशात् नीलाचलं प्रस्थितः । तथाहि जन्मविवरणे-

'त्रिपुर ग्रामरे पटणा कुलरे पश्चिम वट मूलरे । अपूर्व वेश से धरि गुरुब्रह्म विजे कले मंगलरे ॥

पश्चिम वटर मूलरे वसिण स्वपन कथा पाञ्चिलि । से रूपकु ध्यान करिण मुंहि ये साक्षात प्राय मणिलि ॥

स्पूरिला ये पद से ज्ञानरे भेद गीता भागवत आदि । सिद्धान्त योगान्त सर्व विधिमत मन्त्र तन्त्र हिं इत्यादि ॥

मने मोर मिशि मनकु विध्वंसि हेतु पाटणारे वसि । हानिलाभ विकाकिणा लागिला मो सकल मिलिला आसि ॥

वाञ्चित फल तरुवर फलिला दिशिला ज्ञानर वाट । तेणु ग्राम स्थान मान मुं चिन्हिलि पाइलि तुमरि भेट ॥' इति। अच्युतानन्दो महान् दार्शनिक आसीत् । न केवलं वेदादिशास्त्रेषु अपितु अस्मिन् संसारे यानि शास्त्राणि सन्ति तान्ति परमात्मतत्त्वं प्रतिपादयितुमसमर्थानि भवन्ति। तेषु परमात्मा अलभ्य इति तस्य बलिष्ठा युक्तिरासीत् । तन्मते 'चारिखानि' ग्रन्थे-

'बेद होइला ये मो तहुं आग । वेदान्त कहे उपदेश भाग ॥

एमाने यहुं जाणि न पारिले । निरंजन वोलि नाम धइले ॥

वेद आदि होइ तहिंकि नांहि । तहिंकि आन पटान्तर कांहि ॥

आवर येतेक ग्रन्थ पढिवा । कवि कृत्य वोलि ताहा छाडिवा ॥

विद्या पढिवा धन लोभे सेठि । विद्यंहु भिन्ने ज्ञान वोलि येटि ॥'

अनुभवं विना गुरूपदेशः सारहीनः । गुरुः मार्गप्रदर्शकः । किन्तु शिष्यः स्वानुभवेन अग्रेसरणीयः । कर्मणा ज्ञानोदयः  पुनः ज्ञानेन कर्मनाशः ,इत्यत्र कर्म-ज्ञानयोः पारस्परिक-सम्बन्धः स्थिरीकृतः । अनयोः संपर्कः पुष्प-फलवत् स्वीकार्यः । तथाहि-

'फुलकु लागि फ्ल येन्हे बढे । फ्ल बढिले फुल झडि पडे ॥' इति ।

मनः मनुष्यकृते सर्वश्रेष्ठं साधनम् । मनसः स्थिरीकरणं हि तस्य कृते अभ्युदयोपायः । उपनिषद् वचनानुसारं मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः इति । अच्युतमतेन तु-

'तु मन तिनि जगतकु राजा । तोहो न आपिले देवे अपूजा ॥

तु यहुं तोते परते न याउ । जन्म मरण तेणु करि पाउ ॥

परकु थापि पर सिद्ध करु । मोह जले बुडि आपणे मरु ॥

रहि आतयात करु संसार । तो विना नांहि तिनिपुर ॥

असिद्ध रूप सिद्ध करि पारु । सिद्ध कु किम्पा सद्भावे मारु ॥

यावत चन्द्र दिवाकर थिव । तोहो रखिले देह किम्पा यिव ॥' ( द्वितीय खानि-९-१४) इति । अच्युतानन्दः संसारस्य अनित्यता प्रमाणीकृता । सर्वे सांसारिक-बन्धवोऽपि अनित्याः । देह एव स्वस्य सखा इति तेन भणितम्। देहं विना न कोऽपि मुक्तिं प्राप्तुं शक्नोति । सुतरां देहस्य रक्षणं सर्वादौ कर्तव्यम् । उक्तं च-

'विद्या संपत्ति यौवन धन । देह थिले सिना थिव एमान ॥

सवु हजिले देह थिले पाइ । देह हजिले कि संसारु याइ ॥'( प्र०खा०-८५-८६)

'जन्म हिं एका मरण हिं एका । बन्धु बान्धव ए काहा सखा ॥

अर्थ लुवुधे कथा भावे संग । ये याजा करम ताहारि अंग ॥' (द्वि०खा०-४३-४४) अपि च तत्र-

'काहा होइ नांहु देह निमन्ते । एते मान देह लेछु केमन्ते ॥

देह नाशके तु रहिवु कांहि । सबु होइअछु देहरे थाइ ॥

ए देह गले तु कांहिकि लेखा । देह जीवन ए तोहरि सखा ॥' (द्वि०-३८) अच्युतानन्दः परमो वैष्णव आसीत् । वेदपाठ विरहितेभ्यः पञ्चसखिभ्यः तदानीं ब्राह्मणाः स्वीय असूयाभावं प्रदर्शयन्ति स्म । जातिभेदप्रथां विलोपयितुं तस्य चेष्टा अवारिता आसीत् । शास्त्रं शस्त्ररूपेण व्यवहृत्य सः ब्राह्मणानां कुचेष्टा खण्डितवान् । श्रीकृष्णसेवां स्वीकृत्य आत्मानं शुद्र इति मन्यमानं दाससंज्ञया अभिहितः । तथाहि चौरासी मन्त्रे- 'अच्युति दास मुं वैष्णव जाति । वैष्णव सेवारे थाइ मो मति ॥' अपि च उदयकाहाणी ग्रन्थे- 'शुण रामचन्द्र गोप कुमर । सेवा आमर श्रीकृष्ण पयर ॥ तहुं पञ्चसखा शूद्र होइलु । ज्येष्ठ कनिष्ठ वारि न पारिलु ॥' इति । साधनापीठे नेमाले तस्य देहावसानं भवतु इति तेन स्वयं प्रार्थितम् पटलसंहितायाः पंचमे पटले-

'सनातन धर्म स्थापि देह हजाइवि । नेमाल भूमिरे शून्य समाधि पाइवि ॥' अपि च विचित्र यन्त्रे- 'चित्रोत्पला कूले नेमाल घर । समाधि वट मो तहिं वेहार ॥' अष्टगुज्जर्यामपि- 'चित्रोत्पला नदी उत्तरे ग्राम लेम्बाल स्थान । सेठारे ए देह भजिव मागे एहि धिआन ॥' इति नेमालस्थ साधनापीठे १०५ वयसि तस्य देहावसानमभूत्  । अच्युतानन्दस्य रचनासम्भारो विशाल आसीत् । स्वकृत रचनावलीनां परिचयदातुं तेन अणाकार संहितायां भणितम्-

'छतिश संहिता अठस्तरि गीता वंशानु सप्तविंशरे ।  उपवंशानु द्वाविंश खण्ड घेनि भविष्य शत खण्डरे ॥

पद पदावली लक्षेक ये ग्रन्थ सवु श्रीकृष्ण महिमा । तो आगे कहिलु वरज कुमर ब्रह्म सारस्वत सीमा ॥' इति । नैके ग्रन्थाः तेन विलिखिताः । संहितासु- शून्यसंहिता- छायासंहिता-ज्योतिसंहिता- अबाड संहिता-अनाहत संहिता- ज्ञान संहिता-हज संहिता-अणाकार संहिता-अकलित संहिता- वट संहिता-शब्द ब्रह्म संहिता वा चारिखानि-राज संहिता-ब्रह्म संहिता-एकाक्षर संहिता-भक्ति संहिता-पटल संहिता-मन्त्र संहिता-जन्म संहिता-क्षेत्र संहिता-पद्म संहिता-गोलक संहिता-बीज संहिका-जुमर संहिता-अकार संहिता-अमर संहिता एवं यन्त्र संहिताः अन्यतमाः । आसु संहितासु गुरुशिष्य परंपरा साधन प्रणाली च वर्णिता ।

तत्प्रोक्त ७८ गीतासु उपलब्धाः गुरुभक्ति गीता-गरुड गीता-कैवर्त्त गीता-जाति पाटक गीता-युगाब्द गीता-भक्तिलीला गीता-वरण चरित गीता-हरिलीला गीता-उपदेश चक्र गीता-ज्ञान प्रदीप गीता-हरितिलक गीता-बीजसार गीता-जन्मलीला गीता-विन्दुसार गीता-मण्डल गीता-मणिबन्ध गीता-मणिवरण गीता-युगान्त सागर गीता-शून्यगीता-इन्द्रगोविन्द गीता-तत्त्वसागर गीता-परमगुप्त गीता-एकाक्षरी गीता एवं परमज्ञान गीताः प्रमुखा अन्यतमा भवन्ति । वंशानुचरितेषु सप्तखण्ड विशिष्टं हरिवंशपुराणं उत्कलराज्यस्य प्रतिगृहेषु प्रसिद्धम् । शतमालिकासु संप्रति अवतार मालिका-कलियुग मालिका-आगत भविष्यत मालिका-दशपटल मालिकाः उपलब्धाः ।

रासग्रन्थेषु नित्यराहास-शून्यराहास-गुज्जरी राहास-ठुलशून्य राहास-महानित्य राहास-वृन्दा राहास- परम राहास- दूती राहास-राहास प्रेमपञ्चामृत-विष्णु राहास-अनन्तजल राहास-राधारास-नित्यरास एवं पद्मवन राहासाः भक्तिरसेन ओतःप्रोताः । बोलिरचनासु ज्ञानसागर बोलि-हेतुसागर बोलि-ज्ञानतत्त्वसार बोलि-अलंकार बोलि-पद्म बोलि-ब्रह्माण्डसागर बोलि-वणभोजि बोलि-कुसुमकेलि बोलि-आदि बोलि-घटसागर बोलि प्रमुखाः सन्ति । कोइलि ग्रन्थेषु ज्ञानोदय कोइलि-वाखर कोइलि- डिबिडिबि कोइलि च प्रसिद्धाः ।

अच्युतानन्दः लक्षाधिक पद-पदावलीनां निर्माणं कृतवान् । तेषु अष्ट गुज्जरी-नव गुज्जरी-वर्णटीका-कल्पटीका-गणभूत टीका-चन्द्रकल्प टीका-पद्मटीका-शिवकल्प-वैशाखकल्प-तुलसीकल्प-पद्मकल्प-कलिकल्प-दशपटल-षोडश पटल-चबिश पटल-आगतसार- छाया परचे-रसाम्बुज सिन्धु-निर्घण्ट-परार्द्ध- ॐकार बसाण-बारमास चबिश उपदेश-आठतत्त्व-विप्रचालक-अनन्तगोइ-वट वर्णना-श्रीसप्तांग सुधारण-श्रीहीन विधान भक्तियोग निर्णय-वारमासी गीत-निशि अवकाश-मन्त्र यन्त्र तन्त्रभेद-गुपत ग्रन्थ-ब्रह्मविद्या-अणाकार ब्रह्म यन्त्र-कलि काहाणी-षडचक्र विचार-चौराशि यन्त्र-द्वितीबोध विलास-लक्ष्मीधर विलास-शरण पञ्जर-घाटसधा-गोपालंक ओगाल- उदय काहाणी- ब्रह्मशांकोलि- अभेदकवच- भवनावर-अमर जुमर-सर्वार्थ चिन्तामणि एवं सप्ता भागवतादि असंख्यग्रन्थाः विद्यन्ते । उत्कलीय गीतिसाहित्यक्षेत्रे तस्य अवदानमतुलनीयम् । भजन-जणाण-ओगाल-वारमासी गीतानि तस्य आध्यात्मिकक्षेत्रे स्वकीयं महत्वपूर्णस्थानानि भजन्ते । तद्यथा-

'बाइ मन हो वसि अवना वना अबना बनिले अमिशा मिशिब

अमापरे मपा हेव तो धन ।' इत्यादि । अच्युतानन्दः श्रीजगन्नाथं शून्यपुरुष इति कथितवान् । शून्यपुरुषो नाम अणाकार ब्रह्म निर्गुणः । स नित्यकृष्णो वा गोलककृष्णः । पुरीधाम गोलकपुरो नित्यवैकुण्ठो वा । जगन्नाथः पुरुषोत्तमः शून्यपुरुषः । अत्र शून्यो नाम नाभावः किन्तु सक्रिय ज्योतिःस्वरूप एव । काया साधना- हठयोग- पिण्डब्रह्माण्ड तत्त्वेषु अच्युतानन्दः सिद्धहस्त आसीत् । शून्यपुरुष प्रसंगे तेन भणितम्-

'भला पचारिलु गुपत सन्धि । शून्यपुरुष शून्यपरे वन्दि ।

शुन्यपुरुष उदासरे रहे । शून्यपुरुष सबु माया भ्याये ॥

शून्यपुरुष दयालु अटइ । शून्यपुरुष सर्व घटे रहि ॥

शून्यपुरुष कले नटघट । शून्यपुरुष जाणे छन्द कूट ॥

शून्यपुरुष शून्यरे मारइ । मारि शून्य गति करइ ॥

शून्यपुरुष अलगे रहिछि । शून्यपरे रहि लीला करुछि ॥' इति । आध्यात्मिको गुरुः अच्युतानन्दो नमस्यः । भक्तिसाहित्ये तस्य योगदानमविस्मरणीयम् ।

४-महापुरुषो यशोवन्तदासः

महापुरुषो यशोवन्तः उत्कलीयः । "पञ्चसखा" गोष्ठीषु अन्यतमः । अस्य जन्मसमयविषये यद्यपि प्रामाणिक-निर्दिष्टतथ्यं नास्ति तथापि अयं महात्मा षोडशशताब्दीय इति ऐतिहासिका समामनन्ति । जगत्सिंहपुरस्य 'अढंग' ग्रामे १४८२ ख्रीष्टाब्दे यशोवन्त एकस्मिन् क्षत्रियकुले जन्मोऽभूदिति केचन वदन्ति । अन्ये समालोचकाः अस्य जन्मसमयः १४८७ इति द्रढयन्ति । अद्यापि यशोवन्तस्य समाधिपीठः अत्र उपलभ्यते । उदयकाहाणी मतेन-

"तिनि सतर पक्ष पुर येवे । अनन्त शिशु जनमिछि तेवे ।

तार संगे येवे भुज मिशिला । जगन्नाथ दास उदय हेला ॥

सेहि अंके यशोवन्त टि जात । बलराम चारि पूर्वे उदित ॥" इति । अस्य पितुर्नाम जगन्नाथस्तथा मातुर्नाम रेखादेवी स्तः । सर्वसाधारणे तस्य पिता जगु मल्लिकनाम्ना परिचितः । केचन बलभद्र मल्लः तस्य पितुर्नाम इति कथयन्ति । तत्पिता कुजंगराज- कर्मचारी आसीत् । यशोवन्तदासेन स्वपरिचयविषये किमपि नोक्तम् । 'मन्त्रबोलि' नामके तदीये पुस्तके महानुभावस्य यशोवन्तविषये इत्थं वर्तते । तथाहि-

"क्षत्रिय कुलरे जात ये मोहर अढंग स्थलरे अटइ घर ।

पितार नाम बलभद्र शुण यन्त्रबोलि कहे यशोवन्त पुण ॥

मुं यशोवन्त क्षत्रि कुले जात बेलु पढिनांहि नोहि पण्डित ।

प्रभु आज्ञारे यन्त्रबोलि कहि ब्रह्माशंकर येउं पद ध्यायी ॥

यशोवन्त दास गीतरे गाइ न देखि देखिला वन्तिआ वाइ ॥" इति ।

अपि च तच्छिष्येन लोहिदासेन षष्ठिमेला पुस्तके इत्थं भणितम्-

"लोहि कहन्ति शुण गो वाउलि । स्वामी जन्मस्थान देखिवा बुलि ।

पिता मातांक नाम अटे किस । बुझाइ कुह आहे लोहि दास ॥

पितांक नाम बलभद्र जाण । मातांक नाम रेखादेवी जाण ॥

क्षत्रिय कुले जनम होइले । नन्दी ग्रामरे नाना खेला कले ॥" इति ।

आत्मतत्त्वगवेषकोऽयं महात्मा असाधारण प्रतिभासंपन्न आसीत् । यशोवन्तदासः चैतन्यदेवस्य समसामयिक आसीत् । स चैतन्यदेवेन अनुप्राणित उपदिष्टो वेति केचन वदन्ति । तेनोक्तम्-

"एवं भूत येउं प्रभु तांक पञ्च भूत । एवंभूत सखा ये अटइ यशोवन्त ॥" इति । द्वादशवर्षे यशोवन्तः वीतस्पृहः सन् स्वगृहं त्यक्तवान् । पुरीं गत्वा तत्र चैतन्यदेव-सन्निकर्षात् तस्य ज्ञानोदयः संजातः । पश्चात् चैतन्यात् दीक्षां नीत्वा स्वगृहं प्रस्थितवान् । पश्चात् अढंगराज्ञः रघुरामस्य भगिनीं अञ्जनां विवाहं चकार । भक्त-यशोवन्तस्य भगवद्भक्तिं विना अन्यत्किमपि कार्यं नासीत् । आजीविकाहीनस्य धनहीनस्य च यशोवन्तस्य कृते रघुरामः भूमिदानं कृतवान्। वासस्थानमपि तस्मै दत्तवान् । यदुक्तं लोहिदासेन-

"अति अलसुआ वन्तिआ दास । दिन वञ्चइ रघुराम पाश ॥

केवल मोर हरिनामे आश । भावे भणिले यशोवन्त दास ॥" इति ।

यशोवन्तः प्रख्यातयोगी तथा सिद्धपुरुष आसीत् । वैष्णवीयधारां प्रवाह्य स जनमानसं विमुग्धं कृतवान् । श्रीजगन्नाथं प्रति तस्य प्रगाढभक्तिः आसीत् । एकदा पुरीगमन समये एको ब्रह्मराक्षसः तस्य पथरोधं कृतवान् । अलौकीकशक्त्या यशोवन्तः तं तत्र मार्गे अवरुरोधः । अन्ते ब्रह्मराक्षस प्रार्थनया प्रीतः सन् यशोवन्तः गुण्डिचामन्दिरं रक्षणाय राज्ञः प्रतापरुद्रस्य सहमत्या तं गुण्डिचामन्दिरे अवस्थापितवान् । अद्यावधि 'वावनाभूत' नाम्ना सः तस्मिन् कार्ये संलग्न आसीत् । अलौकीकशक्ति संपन्नः यशोवन्तः सर्वदा श्रीकृष्णभक्त्या जाग्रतः आसीत् । वैष्णवधर्मे दीक्षितो भूत्वा तेन वैष्णव-संप्रदायसम्मताः नाना ग्रन्थाः विरचिताः । शिवस्वरोदयः तस्य प्रख्यातो योगग्रन्थ आसीत् । यद्यप्ययं ज्ञानमिश्राभक्तेः उपासक आसीत् तथापि योगमार्गं समर्थयितुं योगविषयकः शिवस्वरोदयो विरचितः । एतदतिरिक्तं अन्यानि हेतुदय भागवतम्, प्रेमभक्ति ब्रह्मगीता, रासः, गीत गोविन्दचन्द्र , आगत भविष्य मालिका, धानचोरी,वाघगीता, भजनसारः चौराशी आज्ञादीनि पुस्तकानि तस्य मौलिकानि सन्ति ।

यशोवन्तः स्वकीयमृत्यु-दिवसविषये पूर्वज्ञात आसीत् । पूर्वकथित मार्गशिर-शुक्ल-षष्ठीतिथौ तस्य महाप्रयाणोऽभूत् । एकस्मिन् कदम्बवृक्षमूले सः समाधिस्थो बभूव । तत्र प्राणान् तत्याज योगमार्गेण । यदुक्तं लोहिदासेन षष्ठीमेलायाम्-

"निभियिब ज्योति जलुछि प्रभु निकर दिने । मार्गशिर मास निदान यिवि उत्तरायणे ॥

वारकला रविवाररे रविवार दिवस । पिण्डरु प्राण छाडि यिव मुं ये हेवि हरष ॥

श्रीपुरुषोत्तम क्षेत्रकु पथ येंउ घटणा । खिति पाहारी जगिथिवे मुं जे नोहिवि वणा ॥" अपि च तत्र-

"हनु येउं नाम धरिण हेले जिणिला लंका । सेपादु मो मन न टलु किम्बा यमकु दका ॥

छ छन्दे प्रभुंकु जपि मुं पाइ मुकति वाट । पामर वन्तिआ कहइ फिटु माया कवाट ॥" इति ।

जगन्नाथस्य विग्रहे तस्य आत्मा विलीन अभवत् । अद्यावधि तस्य महाप्रयाण दिवसः तदीयभक्तैः साडम्बरं परिपाल्यते । पवित्रा ओढण षष्ठी तस्य श्राद्धदिवसरूपेण स्थिरीकृता ।

गीतगोविन्द चन्द्रः अस्य महान् ग्रन्थः । अयमाध्यात्मिक चेतनायाः प्रकृष्टो मार्गः । नाथधर्मस्य वार्त्ता अस्मिन् सुष्ठु प्रतिफलिता । इयं रचना जनप्रिया, उत्कलस्य प्रतिमुखे आध्यात्मिकी वार्तारूपेण प्रवर्तमाना दृश्यते । गीतगोविन्द चन्द्रस्य विषयवस्तुमुपजीव्य पश्चात् टीकागोविन्द चन्द्रः योगेन्द्र दैवज्ञेन विरचितः । अत्र भक्तिरस-करुणरसयोः वर्णनं मिलति ।

रासः यशोवन्तस्य क्षुद्रो ग्रन्थः । जीवात्मनि परमात्मदर्शनं अस्य विषयवस्तुः । द्वैतसिद्धान्तोऽत्र विवक्षितः ।

शिवस्वरोदयो योगपरकः । २१ अध्याय विशिष्टेऽस्मिन् ग्रन्थे नाना विषयाः शिव-पार्वती संम्बादेन विवक्षिताः ।

प्रेमभक्ति ब्रह्मगीता आध्यात्मिक तत्त्वसंम्बलिता । अत्र ज्ञानमिश्रा भक्तेः पराकाष्ठा प्रदर्शिता । ब्रह्मज्ञानमस्य मूलतत्त्वम् । तथाहि-

"से विन्दु योगमाया परे । रहिले अर्द्धमात्रा शिरे ॥

शेषे ॐकार बोलाइले । वेदरे प्रणव होइले ॥

याहाकु अणाक्षर कहि । से विन्दु ब्रह्म अछि वहि ॥

तहुं जन्मिला एकाक्षर । अनन्त सर्पर आकार ॥

ताहाकु सुषुमुना कहि । से शिशुवेद घर सेहि ॥" इति ।

भविष्यमालिका अस्य महती कृतिः, या आगत-भविष्यविषये समलंकृता । यच्चोक्तम्-

"घोर ये अन्धार हेव चउविश प्रहर । घोषुथिवे भकत मो एकाइ अक्षर ॥

निश्चये कलकी रूप हेव अवतार । नाशिवे सकल दुःख अवनीर भार ॥" इति ।

महामानवो यशोवन्तः उत्कलस्य महान् तपस्वी आसीत् । तस्य बहु ग्रन्था अद्यावधि अप्रकाशिताः वर्तन्ते । उत्कलभाषां प्रति तस्य अवदानमविस्मरणीयं महत्त्वपूर्णमिति न सन्देहस्यावकाशः ।

५-शिशु-अनन्तदासः

शिशु-संप्रदायस्य प्रतिष्ठाता शिशु-अनन्तः "पञ्चसखा" गोष्ठीषु सर्वकनिष्ठत्वेन परिगणितः । अयं महात्मा १४८६ ख्रीष्टाब्दे पुरी जिल्लायाः 'बालिपाटणा' नामके स्थाने एकस्मिन् करण परिवारे अजायत । केचन अस्य जन्मस्थानं कौणार्कभूमौ अभवदिति कथयन्ति ,तन्मृग्यम् । अस्य पिता कपिल महान्तिः माता च गौरी देवी आस्ताम् । तदुक्तम् ईश्वरदासेन चैतन्यभागवते-

"कपिल महान्ति ता नाम । ताहार पुत्र अनुपम ॥

अनन्त माहान्ति बोलाइ । कोठ करण होइथाइ ॥"

भुवनेश्वरस्थितः 'खण्डगिरि' स्थानमस्य महात्मनः साधनपीठ आसीत् । किम्बदन्ती आसीत्सः सूर्यदेवादेशेन पुरीं गत्वा चैतन्यात् दीक्षां प्रगृह्य एकाक्षर-सूर्यमन्त्रं प्राप्तवान् । तस्मात् सहस्रश्लोकानपि प्राप्तवान् ।

शिशु अनन्तः प्रख्यातो योगी आसीत् । योगशक्त्या शिशुः भूत्वा सः देव्याः महालक्ष्म्याः कोलमण्डनं चकार । अनया योगविभूत्या सन्तुष्टः सन् स्वयं देवाधिदेवो जगन्नाथस्तस्मै शिशु-उपाधिं दत्तवान् इति कर्णाकर्णिकया श्रुत्या ज्ञायते । अयं सम्बादः ईश्वरदासकृत-चैतन्यभागवतात् प्रमाणीक्रियते । यच्चोक्तम्-

"शिशु रूपरे मोते भ्रम । अनन्त शिशु तोर नाम ॥

पृथिवी येते दिन थिव । तो नाम विख्यात होइव ॥" इति ।

अनन्तदासस्य बहवो ग्रन्था आसन् । तेषु हेतु उदय भागवतं, चुम्बक मालिका, अणाकार शवद, भवमुक्तिदायक गीता, अर्थतारिणी, भजनतत्त्वम्, मन्त्रचन्द्रिका, गरुड-केशव संम्बादः, पिण्ड-ब्रह्माण्ड गीता, ठिक बाखरः, उदे बाखरः, छाट बाखरः, आगत भविष्यः, पद्मवन रासः, ठुल शून्यरासः, यन्त्रटीका, धामछत्रम्, वैष्णव पुराणम् ,शिशुमन्त्रविचारादयः प्रसिद्धाः वर्तन्ते ।

अनन्तदासस्य बहु शिष्या आसन् । शिशु अर्जुन दासः, शिशु वनमालि दासः, शिशु शंकर दासः, शिशु प्रताप रायः एवं शिशु दयानिधि दासप्रमुखाः मूर्द्धन्याः सन्ति । एते सर्वे शिशु संप्रदायेषु अन्तर्भुक्ता भवन्ति ।

'पञ्चसखा' इति कल्पना ओडिआ साहित्यस्य बलिष्ठा परंपरा । अयं विशालः फलपुष्पयुक्त-पनसवृक्षरूपेण परिगणितः कदाचित् । वृक्षस्यात्मा स्वयं जगन्नाथः । द्रष्टा श्रीचैतन्यः । तथाहि-

"जगन्नाथ दास शुणिले । मञ्जिरूपी वृक्ष स्थापिले ॥

प्रभुंकु कले सुमरण । बालुत वृक्ष कले पुण ॥

बालुत वृक्षकु बलराम । कले युवा डाल पत्रेण ॥

मो आज्ञा पाइ वृक्ष तोष । वउले फलिला पणस ॥

अच्युत आज्ञारे पणस । वृक्षरे पाचिण अवश्य ॥

आज्ञा प्रमाणे वृक्ष पुण । भूमिकु ओहलि पडिण ॥

पणस तोलि शिशु नेइ । चैतन्य पारुशे दिअइ ॥

पक्व पणस चइतन । भांगिण वाण्टिले आपण ॥" इति । इदं सुवासितं सुन्दरतमं मधुरफलं षोडशशताब्द्याः आरभ्य अद्यावधि सर्वत्र सादु भोजनरूपेण प्रतिभाति ।

'हेतूदय भागवतम्' अनन्तदासस्य कृतिषु अन्यतमम् । अस्मिन् ग्रन्थे पिण्ड ब्रह्माण्डतत्त्वम्, काया साधनम्, जगन्नाथस्य बुद्धरूप स्वीकारः, शरीरे जगन्नाथस्य अवस्थितिः एवं राधाकृष्णयोः जीवात्म-पपरमात्म रूपेण वर्णनं मिलति । यच्चोक्तं-

"श्रीराधाकृष्ण वेनि जन । जीव परम रूपे जाण ॥" इति । अनयोः राधाकृष्णयोरवस्थानं धवलांगद्वीपे वर्तते । गोपीभक्तेः निदर्शन स्वरूपेण केवलं कामिनी भावेन हि कृष्णप्राप्तिर्जायते । अपि च तत्र- "कामिनी गणे आभासइ । पुरुष लेश तहिं नांहि ॥" इति प्रेमभक्तेः पराकाष्ठा वर्णिता । सृष्टिप्रक्रिया चात्र- आदौ ॐकारः । तस्मादाकाशः । आकाशात् विन्दुः । विन्दोः मनः । मनसो माया । मायायाः सत्यम् । सत्यात् विराड् इति समुत्पद्यन्ते ।

हेतूदय-भागवते आदौ गुरुतत्त्वं वर्णितम् । गुरुः सर्वेषां जीवानां समुद्धरकर्ता । तं विना मुक्तौ नाधिकारो वर्तते । शिष्यस्य जिज्ञासा बहुविधा अस्ति । आदौ शास्त्र श्रवणम् । तत्तु –

"यदि शुणइ मूढपणे । वधिर जन्म अकारणे ।

यदि शुणइ ममतारे । असुर जन्म लभे नरे ॥

यदि शुणइ अहं गुणे । नर्क भोजन अनुदिने ॥

ये शुणि करे उपहास । नर्करे जन्म ता अवश्य ॥"

अपि चात्र-

"येवण जन ए दीक्षाकु । विख्याति कहइ आनकु ॥

एमन्ते सात जन्म गले । पुणि जन्मइ भाट घरे ॥

भाट वनिता पणे पुन । दिन वञ्चइ अनुदिन ॥

एहि मतरे दिन जाइ । जीव उद्धरि न पारइ ॥

येउं गुपत गुरुवाणी । विख्यात कला मूढ प्राणी ॥

तेणु पाइला सेहु फल । जन्म लभिला भाट कुल ॥

गुरु ये शिष्यंक विचार । अन्यकु दिशे अन्धकार ॥" इति गुरोः तत्त्वश्रवणविधानं वर्णितम् ।

'असाधन-मार्गः' अथवा अजपाजपविधिः अनन्तदासस्य महती साधना वर्तते । अवनाक्षर-जपेन कोटिजन्मस्य पापं विधौति इति तस्य नय आसीत् । अयं मार्गः न केनापि साधनकोटिषु अन्तर्भुक्तः । तस्मादसाधनमार्गत्वेन परिगणितः स्वीकृतश्च । तथाहि-

"दन्त ओष्ट न हलिब शिर क्ण्ठ न कम्पिब ।

मन्त्र यन्त्र नांहि तंहि देखिव ब्रह्मस्वरूप ॥" इति समर्थयति दादु महाराजः-

"नैनविन देखिवा अंगविन पेखिवा ।

रसनविन वोलिबा ब्रह्म सेती ।

श्रवन् विन शुणिवा चरण विन चालिवा

चित्त विन चेतिवा सहज एति ।" इति अतिन्द्रिय मार्गेण ब्रह्मसाक्षात्कारः सम्भव इति निष्कर्षः । तीर्थ्व्रतादिकमपि न साधनमार्गे सहायका भवन्ति । शरीरमेव सकलसाधन स्थलम् । सुस्थे शरीरे सकलाः साधनाः सिध्यन्ति । तस्मात्पिण्डब्रह्माण्डसाधनं सर्वश्रेष्ठम् । यतो हि -

"न या तीर्थ व्रत करि । हृदे जप राम हरि ।

कहन्ति अनन्त शिशु तरिवु ए भवकु---- ॥" इति नामस्मरणस्य सर्वित्कृष्टा साधना उक्ता । रा म अथवा ह रि इति संयुक्ताक्षर-स्मरणं नक्तन्दिवं कार्यम् । तद्व्यतिरिक्तं द्वितीयो मार्गो नावशिष्यते । तथाहि-

"ए वेनि अक्षर येवे एकत्र होइव । हरि वोलि करि नाम हृदरे बुणिव ।

हरि उदे हेउछन्ति न जाणन्ति केहि । कहन्ति अनन्त शिशु हरीन्द्रकु ध्यायी ॥" इति सर्वं हरिमयं जगदिति सप्रमाणं निगदितं तेन । साधनसिद्धः अनन्तदासस्य आसीत् जगन्नाथे प्रगाढो विश्वासः । परम-भागवतोत्तमस्य श्रीहरेर्विशुद्धभक्तिं प्राप्तुं तेन सर्वादौ चेष्टितः । सफलीकृतश्च । जय जगन्नाथ ।

सहायक ग्रन्थाः

१-अतिबड जगन्नाथ दास- रत्नाकर कर १म १९३२

२-अतिबडी जगन्नाथ दास-डः कृष्ण चरण बेहेरा १म२००२

३- अतिबडी जगन्नाथ दास-काली चरण पट्टनायक ३य १९६९

४- अतिबडी जगन्नाथ परिक्रमा- नित्यानन्द शतपथी१म १९७५

५-jagannath das- sitakanta mahapatra 1st 1989

६- जगन्नाथ दास-डः भगवान पण्डा १म १९९३

७- महापुरुष जगन्नाथ दास-सर्वेश्वर दास १म१९९४

८-जगन्नाथ चरितामृत- दिवाकर दास १म१९६३

९-श्रीमद्भागवत-नीलमणि मिश्र३य२०१३

१०-सन्थकवि अच्युतानन्द दास ओ शून्यसंहिता- मृत्युञ्जय नायकः

११-अच्युतानन्द रचनावली- रत्नाकर चइनि

१२-अच्युतानन्द दास- कुञ्जविहारी महान्तिः

१३-अनादि संहिता -अच्युतानन्दः

१४-अणाकार संहिता- अच्युतानन्दः

१५-शब्दब्रह्म संहिता- अच्युतानन्दः

१६-छयालिश पटल- अच्युतानन्दः

१७-गोपालंक ओगाल- अच्युतानन्दः

१८-प्रफेसर कृष्णचरण साहु रचना सम्भार

१९-महापुरुष परिचय ओ बाणी- निमांइ चरण दासः

२०-ओडिआ साहित्यर इतिहास- विनायक मिश्रः

२१-ओडिशार धर्मधारारे पंचसखा परिकल्पना- नटवर सामन्तरायः

२२-पञ्चसखा ओडिआ साहित्य- देवेन्द्र महान्तिः

२३-सन्थ भक्ति साहित्य-चित्तरंजन दासः

२४-शिव स्वरोदय - अध्यापकः आर्त्तवल्लभ महान्तिः

२५-ओडिआ साहित्यर इतिहास- डः वंशीधर महान्तिः

२६-ओडिआ साहित्यर आदिपर्व- सुरेन्द्र महान्तिः

२७- पञ्चसखा परंपरा परीक्षा (प्रवन्ध) सच्चिदानन्द मिश्रः, झंकार पत्रिका- मार्च १९६०

२८- पञ्चसखा प्रवञ्चना नुंहे- डः कृष्णचन्द्र साहु(प्रवन्ध)दिगन्त,डिसेम्बर १९६७

२९-ओडिआ साहित्यर इतिहास- पं सूर्यनारायण दासः

३०- ओडिआ साहित्यर सांस्कृतिक विचारधारा- चित्तरंजन दासः

२१-यशोवन्त दास-डः लावण्य नायकः

३२-प्रेमभक्ति ब्रह्मगीता- यशोवन्त दासः

३३-ओडिसार धर्मधारारे पञ्चसखा परिकल्पना- डः नटवर सामन्त रायः

३४-महापुरुष परिचय ओ बाणी- निमांइ चरण दासः

३५- सन्थ भक्ति साहित्य-चित्तरंजन दासः

३६-कृष्णचन्द्र साहु रचनासम्भार ५ भाग

३७- ओडिआ स्नातक पाठ्यक्रमः- Odisha state open university ,sambalpur

३८- ओडिआ साहित्यर आदिपर्व- सुरेन्द्र महान्तिः

३९-महापुरुष परिचय ओ बाणी- निमांइ चरण दासः

४०-wikipidia org

डः प्रदीप्तकुमारः नन्दः

वरिष्ठाध्यापकः श्रीदधिवामन जीउ संस्कृत महाविद्यालयः

तमालशासनम्, केन्द्रापडा, ओडिशा